# द्वित्वलक्षणम्

पदादौ पदमध्ये वा स्थितस्योष्मपरस्य वै
प्रथमस्य द्वितीयत्वं पूर्वं कुर्वीत पण्डितः १
अभिधानाख्यवर्णस्य प्रथमस्य परे यदि
मुख्यप्रथमसद्भावे द्वित्वं न स्यात् सदोष्मणाम् २
न रेफे वा हकारे वा द्विर्भावो जायते क्वचित्
न च वर्गद्वितीयस्य न चतुर्थे कदाचन ३
व्यञ्जनादह्नतं पूर्वं द्वित्वमित्यभिधीयते
स्वरादह्नतं पूर्वं द्वित्वं न स्यात्कदाचन ४
काठके तु पृणच्छिद्रं द्वित्वमित्यभिधीयते
अपेतेति पृणच्छिद्रं द्वित्वं न स्यात्कदाचन ५
राशेवे च परो लस्तु द्वित्वं नैत्यप्यसंयुतः
व्यञ्जनानामसंयोगो यत्र येन निषिध्यते ६
तत्र तेन भवेद्द्वित्वं लस्य वस्वार एव हि
लकारस्य वकारेण संयोगः स्वरतो यदि
तथा संयुक्त एव स्यादसंयुक्तस्तथान्यथा ७
रेफपूर्वो नकारो यः पदान्तो यत्र दृश्यते

विशेषं तत्र जानीयाद्द्वित्वमित्यभिधीयते ८
रेफात्परमृवर्णस्य व्यञ्जनत्वं प्रकीर्तितम्
तस्मात्संयुक्तकार्याणि भवन्ति हि यथाविधि ९
दीर्घात्परस्य रेफस्य ऋकारे परतः स्थिते
रेफः पूर्वस्वराङ्गः स्याद्ध्रस्वाच्चापि तथा भवेत् १०
दीर्घस्वरात्पदान्तस्था या भक्तिरुपजातयः
सापि पूर्वस्वराङ्गः स्याद् दोषावस्तर्हिविष्मति ११

इति द्वित्वलक्षणं समाप्तम्